यमाणत्वकरिष्यमाणत्वरूपं तीव्रमन्दपरिणामभेदात्तदनुरूपकार्यकारित्वरूपं च नानात्वमवसेयमिति ॥ अनन्तरं कर्म्म निरूपितं, तच्च पुद्गलरूपमिति पुद्गलानधिकृत्याह—

नेरइया णं भंते ! जे पोग्गले आहारत्ताए गेण्हंति तेसि णं भंते ! पोग्गलाणं सेयकालंमि कतिभागं आहारेंति कतिभागं निज्जरेंति ?, मागंदियपुत्ता ! असंखेज्जइभागं आहारेंति अणंतभागं निज्जरेंति, चक्किया णं भंते ! केइ तेसु निज्जरापोग्गलेसु आसइत्तए वा जाव तुयट्टित्तए वा ? णो तिणट्ठे समट्ठे, अणाहरणमेयं वुइयं समणाउसो ! एवं जाव वेमाणियाणं । सेवं भंते ! सेवं भंतेति ॥ (सूत्रं ६२२) ॥ १८-३ ॥

'नेरइए'त्यादि, 'सेयकालंसि'त्ति एष्यति काले ग्रहणानन्तरमित्यर्थः 'असंखेज्जइभागं आहारिंति'त्ति गृहीतपुद्गलानामसङ्ख्येयभागमाहारीकुर्वन्ति गृहीतानामेवानन्तभागं 'निर्जरयन्ति' मूत्रादिवत्त्यजन्ति, 'चक्किय'त्ति शक्नुयात् 'अणाहरणमेयं वुइयं'ति आध्रियतेऽनेनेत्याधरणं-आधारस्तन्निषेधोऽनाधरणं-आधर्तुमक्षमं एतन्निर्जरापुद्गलजातमुक्तं जिनैरिति ॥ अष्टादशशते तृतीयः

---

तृतीयोद्देशकस्यान्ते निर्जरापुद्गलानामासितुमित्यादिभिः पदैरर्थतः परिभोगो विचारितः, चतुर्थे तु प्राणातिपातादीनामसौ विचार्यत इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

तेणं कालेणं २ रायगिहे जाव भगवं गोयमे एवं वयासी—अह भंते ! पाणाइवाए मुसावाए जाव मिच्छादंसणसल्ले पाणाइवायवेरमणे मुसावाय० जाव मिच्छादंसणसल्लवेरमणे पुढविक्काइए जाव वणस्सइकाइए धम्मत्थि-

१८शतके उद्देशः३ आहारनिर्जराभागौ सू. ६२२

प्र०आ०७४३

काए अधम्मत्थिकाए आगासत्थिकाए जीवे असरीरपडिबुद्धे परमाणुपोग्गले सेलेसिं पडिवन्नए अणगारे सव्वे य बादरबोंदिधरा कलेवरा एए णं दुविहा जीवदव्वा य अजीवदव्वा य जीवाणं भंते! परिभोगत्ताए हव्वमागच्छंति ?, गोयमा! पाणाइवाए जाव एए णं दुविहा जीवदव्वा य अजीवदव्वा य अत्थेगतिया जीवाणं परिभोगत्ताए हव्वमागच्छंति अत्थेगतिया जीवाणं जाव नो हव्वमागच्छंति, से केणट्ठेणं भंते! एवं वुच्चइ पाणाइवाए जाव नो हव्वमागच्छंति ?, गोयमा! पाणाइवाए जाव मिच्छादंसणसल्ले पुढविकाइए जाव वणस्सइकाइए सव्वे य बायरबोंदिधरा कलेवरा एए णं दुविहा जीवदव्वा य अजीवदव्वा य जीवाणं परिभोगत्ताए हव्वमागच्छंति, पाणाइवायवेरमणे जाव मिच्छादंसणसल्लविवेगे धम्मत्थिकाए अधम्मत्थिकाए जाव परमाणुपोग्गले सेलेसीं पडिवन्नए अणगारे एए णं दुविहा जीवदव्वा य अजीवदव्वा य जीवाणं परिभोगत्ताए नो हव्वमागच्छन्ति से तेणट्ठेणं जाव नो हव्वमागच्छंति (सूत्रं ६२४) ॥ कति णं भंते! कसाया पन्नत्ता ?, गोयमा! चत्तारि कसाया प०, तं०-कसायपदं निरवसेसं भाणियव्वं जाव निज्जरिस्संति लोभेणं ॥ कति णं भंते! जुम्मा पन्नत्ता ?, गोयमा! चत्तारि जुम्मा पन्नत्ता पं० तं०-कडजुम्मे तेयोगे दावरजुम्मे कलिओगे, से केणट्ठेणं भंते! एवं वुच्चइ जाव कलियोए ?, गोयमा! जे णं रासी चउक्कएणं अवहारेणं अवहीरमाणे चउपज्जवसिए सेत्तं कडजुम्मे, जे णं रासी चउक्कएणं अवहारेणं अवहीरमाणे तिपज्जवसिए सेत्तं तेयोए, जे णं रासी चउक्कएणं अवहारेणं अवहीरमाणे दुपज्जवसिए सेत्तं दावरज्जुमे, जे णं रासी चउक्कएणं अवहारेणं अवहीरमाणे एगपज्जवसिए सेत्तं कलिओगे, से तेणट्ठेणं गोयमा!

एवं वुच्चइ जाव कलिओए ॥ नेरइया णं भंते ! किं कडजुम्मा१ तेयोगा२ दावरजुम्मा३ कलियोगा ४ ?, गोयमा ! जहन्नपदे कडजुम्मा उक्कोसपदे तेयोगा अजहन्नुक्कोसपदे सिय कडजुम्मा १ जाव सिय कलियोगा ४, एवं जाव थणियकुमारा । वणस्सइकाइयाणं पुच्छा, गोयमा ! जहन्नपदे अपदा उक्कोसपदे य अपदा अजहन्नुक्कोसियपदे सिय कडजुम्मा जाव सिय कलियोगा ॥ बेइंदिया णं पुच्छा, गोयमा ! जहन्नपदे कडजुम्मा उक्कोसपदे दावरजुम्मा, अजहन्नमणुक्कोसपदे सिय कडजुम्मा जाव सिय कलियोगा, एवं जाव चतुरिंदिया, सेसा एगिंदिया जहा बेंदिया, पंचिंदियतिरिक्खजोणिया जाव वेमाणिया जहा नेरइया, सिद्धा जहा वणस्सइकाइया । इत्थीओ णं भंते ! किं कडजुम्मा० ? पुच्छा, गोयमा ! जहन्नपदे कडजुम्माओ उक्कोसपदे कडजुम्माओ अजहन्नमणुक्कोसपदे सिय कडजुम्माओ जाव सिय कलियोगाओ, एवं असुरकुमारित्थीओवि जाव थणियकुमारइत्थीओ, एवं तिरिक्खजोणियइत्थीओ एवं मणुसित्थीओ एवं जाव वाणमंतरजोइसियवेमाणियदेवित्थीओ ॥ ( सूत्रं ६२५ ) ॥ जावतियाणं भंते ! वरा अंधगवण्हिणो जीवा तावतिया परा अंधगवण्हिणो जीवा ?, हंता गोयमा ! जावतिया वरा अंधगवण्हिणो जीवा तावतिया परा अंधगवण्हिणो जीवा । सेवं भंते २ त्ति (सूत्रं ६२६) ॥ १८-४ ॥



'तेण'मित्यादि, 'जीवे असरीरपडिबद्धे'त्ति त्यक्तसर्वशरीरो जीवः 'बायरबोंदिधरा कलेवर'त्ति स्थूलाकारधराणि न सूक्ष्माणि कडेवराणि-निश्चेतना देहाः अथवा 'बादरबोन्दिधराः' बादराकारधारिणः कडेवरव्यतिरेकात् कडेवरा द्वीन्द्रियादयो जीवाः, 'एए ण'मित्यादि, एतानि प्राणातिपातादीनि सामान्यतो द्विविधानि, न प्रत्येकं, तत्र पृथिवीकायादयो जीवद्रव्याणि, प्राणा-

तिपातादयस्तु न जीवद्रव्याणि, अपि तु तद्धर्म्मा इति न जीवद्रव्याण्यजीवद्रव्याणि, धर्मास्तिकायादयस्तु अजीवरूपाणि द्रव्याणीतिकृत्वा-ऽजीवद्रव्याणीति जीवानां परिभोग्यत्वायागच्छन्ति, जीवैः परिभुज्यन्त इत्यर्थः, तत्र प्राणातिपातादीन् यदा करोति तदा तान् सेवते प्रवृत्तिरूपत्वात्तेषामित्येवं तत्परिभोगः अथवा चारित्रमोहनीयकर्म्मदलिकभोगहेतुत्वात्तेषां चारित्रमोहाणुभोगः प्राणातिपातादिपरिभोग उच्यते, पृथिव्यादीनां तु परिभोगो गमनशोचनादिभिः प्रतीत एव, प्राणातिपातविरमणादीनां तु न परिभोगोऽस्ति वधादिविरतिरूपत्वेन जीवस्वरूपत्वात्तेषां, धर्मास्तिकायादीनां तु चतुर्णाममूर्त्तत्वेन परमाणोः सूक्ष्मत्वेन शैलेशीप्रतिपन्नानगारस्य च प्रेषणाद्यविषयत्वे-नानुपयोगित्वान्न परिभोग इति ॥ परिभोगश्च भावतः कषायवतामेव भवतीति कषायान् प्रज्ञापयितुमाह—'कइ णं'मित्यादि, 'कसायपदं'ति प्रज्ञापनायां चतुर्दशं. तच्चैवं—'कोहकसाए माणकसाए मायाकसाए लोभकसाए'इत्यादि. 'निज्जरिस्संति लोभेणं'ति अस्यैवं सम्बन्धः—'वेमाणिया णं भंते ! कइहिं ठाणेहिं अट्ठ कम्मपयडीओ निज्जरिस्संति ?, गोयमा ! चउहिं ठाणेहिं, तंजहा—कोहेण जाव लोभेणं'ति, इह नारकादीनामष्टापि कर्माण्युदये वर्त्तन्ते, उदयवर्त्तिनां च तेषामवश्यं निर्जरणमस्ति, कषायोदयवर्त्तिनश्च ते ततश्च कषायोदये कर्मनिर्जराया भावात् क्रोधादिभिर्वैमानिकानामष्टकर्मप्रकृतिनिर्जरणमुच्यते इति ॥ अनन्तरं कषाया निरूपिताः, ते च चतुःसङ्ख्यत्वात्कृतयुग्मलक्षणसङ्ख्याविशेषवाच्या इत्यतो युग्मस्वरूपप्रतिपादनायाह—'कइ णं'मित्यादि. 'चत्तारि जुम्म'त्ति इह गणितपरिभाषया समो राशिर्युग्ममुच्यते विषमस्त्वोज इति, तत्र च यद्यपीह द्वौ राशी युग्मशब्दवाच्यौ द्वौ चौजःशब्दवाच्यौ भवतस्त-थाऽपीह युग्मशब्देन राशयो विवक्षिताः अतश्चत्वारि युग्मानि राशय इत्यर्थः, तत्र 'कडजुम्मे'त्ति कृतं-सिद्धं पूर्ण ततः परस्य राशि-सञ्ज्ञान्तरस्याभावेन न त्र्योजःप्रभृतिवदपूर्णं यद् युग्मं-समराशिविशेषस्तत्कृतयुग्मं, 'तेओए'त्ति त्रिभिरादित एव कृतयुग्माद्वोपरिव

त्रिभिरोजो–विषमराशिविशेषस्त्र्योजः, 'दावरज्जुमे'त्ति द्वाभ्यामादित एव कृतयुग्माद्वोपरिवर्त्तिभ्यां यदपरं युग्मं कृतयुग्मादन्यत्तन्निपातनविधेर्द्वापरयुग्मं, 'कलिओए'त्ति कलिना–एकेन आदित एव कृतयुग्माद्वोपरिवर्त्तिना ओजो–विषमराशिविशेषः कल्योज इति । 'जे णं रासी'त्यादि, यो राशिश्चतुष्केनापहारेणापह्रियमाणश्चतुष्पर्यवसितो भवति स कृतयुग्ममित्यभिधीयते, यत्रापि राशौ चतूरूपत्वेन चतुष्कापहारो नास्ति सोऽपि चतुष्पर्यवसितत्वसद्भावात्कृतयुग्ममेव, एवमुत्तरपदेष्वपि ॥ अनन्तरं कृतयुग्मादिराशयः प्ररूपिताः, अथ तैरेव नारकादीन् प्ररूपयन्नाह–'नेरइया ण'मित्यादि, 'जहन्नपदे कडजुम्म'त्ति अत्यन्तस्तोकत्वेन 'कृतयुग्माः' कृतयुग्मसञ्ज्ञिताः 'उक्कोसपए'त्ति सर्वोत्कृष्टतायां त्र्योजःसञ्ज्ञिताः मध्यमपदे चतुर्विधा अपि, एतच्चैवमाज्ञाप्रामाण्यादवगन्तव्यम् । 'वणस्सइकाइया ण'मित्यादि, वनस्पतिकायिका जघन्यपदे उत्कृष्टपदे चापदाः, जघन्यपदस्योत्कृष्टपदस्य च तेषामभावात्, तथाहि–जघन्यपदमुत्कृष्टपदं च तदुच्यते यन्नियतरूपं तच्च यथा नारकादीनां कालान्तरेणापि लभ्यते न तथा वनस्पतीनां तेषां परम्परया सिद्धिगमनेन तद्राशेरनन्तत्वापरित्यागेऽप्यनियतरूपत्वादिति, 'सिद्धा जहा वणस्सइकाइय'त्ति जघन्यपदे उत्कृष्टपदे चापदाः, अजघन्योत्कृष्टपदे च स्यात् कृतयुग्मादय इत्यर्थः, तत्र जघन्योत्कृष्टपदापेक्षयाऽपदत्वं वर्द्धमानतया तेषामनियतपरिमाणत्वाद्भावनीयमिति ॥ जीवपरिमाणाधिकारादिदमाह—'जावइए'त्यादि, यावन्तः 'वर'त्ति अर्वाग्भागवार्त्तिनः आयुष्कापेक्षयाऽल्पायुष्का इत्यर्थः 'अंधगवण्हिणो'त्ति अंहिपा–वृक्षास्तेषां वह्नयस्तदाश्रयत्वेनेत्यंहिपवह्नयो बादरतेजस्कायिका इत्यर्थः, अन्ये त्वाहुः–अन्धकाः–अप्रकाशकाः सूक्ष्मनामकर्मोदयाद्ये वह्नयस्तेऽन्धकवह्नयो जीवाः 'तावइय'त्ति तत्परिमाणाः 'पर'त्ति पराः प्रकृष्टाः स्थितितो दीर्घायुष इत्यर्थ इति प्रश्नः, 'हंते'त्याद्युत्तरमिति ॥ अष्टादशशते चतुर्थः ॥ १८–४ ॥

चतुर्थोद्देशकान्ते तेजस्कायिकवक्तव्यतोक्ता, ते च भास्वरजीवा इति पञ्चमे भास्वरजीवविशेषवक्तव्यतोच्यते इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्

दो भंते! असुरकुमारा एगंसि असुरकुमारावासंसि असुरकुमारदेवत्ताए उववन्ना तत्थ णं एगे असुरकुमारे देवे पासादीए दरिसणिज्जे अभिरूवे पडिरूवे एगे असुरकुमारे देवे से णं नो पासादीए नो दरिसणिज्जे नो अभिरूवे नो पडिरूवे से कहमेयं भंते! एवं?, गोयमा! असुरकुमारा देवा दुविहा प०, तं०—वेउव्वियसरीरा य अवेउव्वियसरीरा य, तत्थ णं जे से वेउव्वियसरीरे असुरकुमारे देवे से णं पासादीए जाव पडिरूवे, तत्थ णं जे से अवेउव्वियसरीरे असुरकुमारे देवे से णं नो पासादीए जाव नो पडिरूवे, से केणट्ठेणं भंते! एवं वुच्चइ तत्थ णं जे से वेउव्वियसरीरे तं चेव जावपडिरूवे?, गोयमा! से जहानामए—इहं मणुयलोगंमि दुवे पुरिसा भवंति—एगे पुरिसे अलंकियविभूसिए एगे पुरिसे अणलंकियविभूसिए, एएसि णं गोयमा! दोण्हं पुरिसाणं कयरे पुरिसे पासादीए जाव पडिरूवे? कयरे पुरिसे नो पासादीए जाव नो पडिरूवे? जे वा से पुरिसे अलंकियविभूसिए जे वा से पुरिसे अणलंकियविभूसिए?, भगवं! तत्थ जे से पुरिसे अलंकियविभूसिए से णं पुरिसे पासादीए जाव पडिरूवे, तत्थ णं जे से पुरिसे अणलंकियविभूसिए से णं पुरिसे नो पासादीए जाव नो पडिरूवे से तेणट्ठेणं जाव नो पडिरूवे। दो भंते! नागकुमारा देवा एगंसि नागकुमारावासंसि एवं चेव एवं जाव थणियकुमारा वाणमंतरजोतिसिया वेमाणिया एवंचेव ॥ (सूत्रं ६२७) ॥

'दो भंते' इत्यादि 'वेउव्वियसरीर' त्ति विभूषितशरीराः ॥ अनन्तरमसुरकुमारादीनां विशेष उक्तः, अथ विशेषाधिकारादिदमाह—

दो भंते! नेरतिया एगंसि नेरतियावासंसि नेरतियत्ताए उववन्ना, तत्थ णं एगे नेरइए महाकम्मतराए चेव जाव महावेयणतराए चेव एगे नेरइए अप्पकम्मतराए चेव जाव अप्पवेयणतराए चेव से कहमेयं भंते! एवं?, गोयमा! नेरइया दुविहा प० तं०—मायिमिच्छादिट्ठिउववन्नगा य अमायिसम्मदिट्ठिउववन्नगा य, तत्थ णं जे से मायिमिच्छादिट्ठिउववन्नए नेरइए से णं महाकम्मतराए चेव जाव महावेयणतराए चेव, तत्थ णं जे से अमायिसम्मदिट्ठिउववन्नए नेरइए से णं अप्पकम्मतराए चेव जाव अप्पवेयणतराए चेव, दो भंते! असुरकुमारा एवं चेव एवं एगिंदियविगलिंदियवज्जा जाव वेमाणिया ॥ (सूत्रं ६२८) ॥

'दो भंते! नेरइए'त्यादि, 'महाकम्मतराए चेव'त्ति इह यावत्करणात् 'महाकिरियतराए चेव महासवतराए चेव'त्ति दृश्यं, व्याख्या चास्य प्राग्वत्। 'एगिंदियविगलिंदियवज्ज'त्ति इहैकेन्द्रियादिवर्जनमेतेषां मायिमिथ्यादृष्टित्वेनामायिसम्यग्दृष्टिविशेषणस्यायुज्यमानत्वादिति ॥ प्राग् नारकादिवक्तव्यतोक्ता, ते चायुष्कप्रतिसंवेदनावन्त इति तेषां तां निरूपयन्नाह—

नेरइए णं भंते! अणंतरं उव्वट्टित्ता जे भविए पंचिंदियतिरिक्खजोणिएसु उववज्जित्तए से णं भंते! कयरं आउयं पडिसंवेदेति?, गोयमा! नेरइयाउयं पडिसंवेदेति पंचिंदियतिरिक्खजोणियाउए से पुरओ कडे चिट्ठति, एवं मणुस्सेसुवि, नवरं मणुस्साउए से पुरओ कडे चिट्ठइ। असुरकुमारा णं भंते! अणंतर उव्वट्टित्ता जे भविए पुढविकाइएसु उववज्जित्तए पुच्छा, गो०! असुरकुमाराउयं पडिसंवेदेति पुढविकाइयाउए से पुरओ कडे चिट्ठइ, एवं जो जहिं भविओ उववज्जित्तए तस्स तं पुरओ कडं चिट्ठति, जत्थ ठिओ तं पडिसंवेदेति जाव वेमाणिए,

नवरं पुढविकाइए पुढविकाइएसु उववज्जन्तो पुढविकाइयाउयं पडिसंवेएति अन्ने य से पुढविक्काइयाउए पुरओ कडे चिट्ठति एवं जाव मणुस्सो सट्ठाणे उववाएयव्वो, परट्ठाणे तहेव ॥ (सूत्रं ६२९) ॥ दो भंते! असुरकुमारा एगंसि असुरकुमारावासंसि असुरकुमारदेवत्ताए उववन्ना तत्थ णं एगे असुरकुमारे देवे उज्जुयं विउव्विस्सामीति उज्जुयं विउव्वइ वंकं विउव्विस्सामीति वंकं विउव्वइ जं जहा इच्छइ तं तहा विउव्वइ, एगे असुरकुमारे देवे उज्जुयं विउव्विस्सामीति वंकं विउव्वइ वंकं विउव्विस्सामीति उज्जुयं विउव्वइ जं जहा इच्छति णो तं तहा विउव्वइ से कहमेयं भंते! एवं?, गोयमा! असुरकुमारा देवा दुविहा पं०, तं०—मायिमिच्छादिट्ठिउववन्नगा य अमायिसम्मदिट्ठीउववन्नगा य, तत्थ णं जे से मायिमिच्छादिट्ठिउववन्नए असुरकुमारे देवे से णं उज्जुयं विउव्विस्सामीति वंकं विउव्वति जाव णो तं तहा विउव्वइ, तत्थ णं जे से अमायिसम्मदिट्ठिउववन्नए असुरकुमारे देवे से उज्जुयं विउ० जाव तं तहा विउव्वइ। दो भंते! नागकुमारा एवं चेव एवं जाव थणिय० वाणमं० जोइसि० वेमाणिया एवं चेव ॥ सेवं भंते! २ त्ति ॥ (सूत्रं ६३०) ॥ १८-५ ॥

'नेरइए ण'मित्यादि, एतच्च व्यक्तमेव ॥ पूर्वमायुःप्रतिसंवेदनोक्ता, अथ तद्विशेषवक्तव्यतामाह—'दो भंते! असुरकुमारा' इत्यादि, यच्चेह मायिमिथ्यादृष्टीनामसुरकुमारादीनामृजुविकुर्वणेच्छायामपि वक्रविकुर्वणं भवति तन्मायामिथ्यात्वप्रत्ययकर्म्मप्रभावात्, अमायिसम्यग्दृष्टीनां तु यथेच्छं विकुर्व्वणा भवति तदार्जवोपेतसम्यक्त्वप्रत्ययकर्म्मवशादिति ॥ अष्टादशशते पञ्चमः ॥ १८-५ ॥

पञ्चमोद्देशकेऽसुरादीनां सचेतनानामनेकस्वभावतोक्ता, षष्ठे तु गुडादीनामचेतनानां सचेतनानां च सोच्यते इत्येवंसम्बद्धस्यास्येदमादिसूत्रं

फाणियगुले णं भंते! कतिवन्ने कतिगंधे कतिरसे कतिफासे पण्णत्ते?, गोयमा! एत्थ णं दो नया भवंति,
तं०–निच्छइयनए य वावहारियनए य, वावहारियनयस्स गोड्डे फाणियगुले नेच्छइयनयस्स पंचवन्ने दुगंधे पंच-
रसे अट्ठफासे प०। भमरे णं भंते! कतिवन्ने? पुच्छा, गोयमा! एत्थ णं दो नया भवंति, तं०—निच्छइयनए य
वावहारियनए य, वावहारियनयस्स कालए भमरे नेच्छइयनयस्स पंचवन्ने जाव अट्ठफासे पं०। सुयपिच्छे णं
भंते! कतिवन्ने एवं चेव, नवरं वावहारियनयस्स नीलए सुयपिच्छे नेच्छइयनयस्स पंचवण्णे सेसं तं चेव, एवं
एएणं अभिलावेणं लोहिया मंजिट्ठिया पीतिया हालिद्दा सुक्किलए संखे सुब्भिगंधे कोट्ठे दुब्भिगंधे मयगसरीरे
तित्ते निंबे कडुया सुंठी कसाए कविट्ठे अंबा अंबिलिया महुरे खंडे कक्खडे वइरे मउए नवणीए गरुए अए लहुए
उलुयपत्ते सीए हिमे उसिणे अगणिकाए णिद्धे तेल्ले, छारिया णं भंते! पुच्छा, गोयमा! एत्थ दो नया भवंति,
तं०–निच्छइयनए य ववहारियनए य, ववहारियनयस्स लुक्खा छारिया नेच्छइयनयस्स पंचवन्ना जाव अट्ठफासा
पन्नत्ता ॥ ( सूत्रं ६३१ ) ॥

'फाणिए'त्यादि, 'फाणियगुले णं'ति द्रवगुडः 'गोड्डे'त्ति गौल्यं–गौल्यरसोपेतं मधुररसोपेतमितियावत्, व्यवहारो हि लो-
कसंव्यवहारपरत्वात् तदेव तत्राभ्युपगच्छति शेषरसवर्णादींस्तु सतोऽप्युपेक्षत इति, 'निच्छइयनयस्स'त्ति नैश्चयिकनयस्य मतेन
पञ्चवर्णादिपरमाणूनां तत्र विद्यमानत्वात् पञ्चवर्णादिरिति ॥

परमाणुपोग्गले णं भंते! कतिवन्ने जाव कतिफासे पन्नत्ते?, गोयमा! एगवन्ने एगगंधे एगरसे दुफासे पन्नत्ते॥ दुपएसिए णं भंते! खंधे कतिवन्ने पुच्छा, गोयमा! सिय एगवन्ने सिय दुवन्ने सिय एगगंधे सिय दुगंधे सिय एगरसे सिय दुरसे सिय दुफासे सिय तिफासे सिय चउफासे पन्नत्ते, एवं तिपएसिएवि, नवरं सिय एगवन्ने सिय दुवन्ने सिय तिवन्ने, एवं रसेसुवि, सेसं जहा दुपएसियस्स, एवं चउपएसिएवि नवरं सिय एगवन्ने जाव सिय चउवन्ने, एवं रसेसुवि सेसं तं चेव, एवं पंचपएसिएवि, नवरं सिय एगवन्ने जाव सिय पंचवन्ने, एवं रसेसुवि, गंधफासा तहेव, जहा पंचपएसिओ एवं जाव असंखेज्जपएसिओ॥ सुहुमपरिणए णं भंते! अणंतपएसिए खंधे कतिवन्ने जहा पंचपएसिए तहेव निरवसेसं, बादरपरिणए णं भंते! अणंतपएसिए खंधे कतिवन्ने पुच्छा, गोयमा! सिय एगवन्ने जाव सिय पंचवन्ने सिय एगगंधे सिय दुगंधे सिय एगरसे जाव सिय पंचरसे सिय चउफासे जाव सिय अट्ठफासे प०॥ सेवं भंते! २ त्ति॥ (सू० ६३२)॥ १८-६॥

'परमाणुपोग्गले ण'मित्यादि, इह च वर्णगन्धरसेषु पञ्च द्वौ पञ्च च विकल्पाः 'दुफासे'त्ति स्निग्धरूक्षशीतोष्णस्पर्शानामन्यतराविरुद्धस्पर्शद्वययुक्त इत्यर्थः, इह च चत्वारो विकल्पाः शीतस्निग्धयोः शीतरूक्षयो उष्णस्निग्धयोः उष्णरूक्षयोश्च सम्बन्धादिति॥ 'दुपएसिए ण'मित्यादि, 'सिय एगवन्ने'त्ति द्वयोरपि प्रदेशयोरेकवर्णत्वात्, इह च पञ्च विकल्पाः, 'सिय दुवन्ने'त्ति प्रतिप्रदेशं वर्णान्तरभावात्, इह च दश विकल्पाः, एवं गन्धादिष्वपि, 'सिय दुफासे'त्ति प्रदेशद्वयस्यापि शीतस्निग्धत्वादिभावात्, इहापि त एव चत्वारो विकल्पाः, 'सिय तिफासे'त्ति इह चत्वारो विकल्पास्तत्र प्रदेशद्वयस्यापि शीतभावात् एकस्य च तत्र

स्निग्धभावात् द्वितीयस्य च रूक्षभावादेकः, 'एवम्' अनेनैव न्यायेन प्रदेशद्वयस्योष्णभावाद्वितीयः, तथा प्रदेशद्वयस्यापि स्निग्धभावात् तत्र चैकस्य शीतभावादेकस्य चोष्णभावात्तृतीयः, 'एवम्' अनेनैव न्यायेन प्रदेशद्वयस्य रूक्षभावाच्चतुर्थ इति, 'सिय चउफासे'त्ति इह 'देसे सीए देसे उसिणे देसे निद्धे देसे लुक्खे'त्ति वक्ष्यमाणवचनादेकः, एवं त्रिप्रदेशादिष्वपि स्वयमभ्यूह्यम् ॥ 'सुहुमपरिणए णं'मित्यादि, अनन्तप्रदेशिको बादरपरिणामोऽपि स्कन्धो भवति द्व्यणुकादिस्तु सूक्ष्मपरिणाम एवेत्यनन्तप्रदेशिकस्कन्धः सूक्ष्मपरिणामत्वेन विशेषितस्तत्राद्याश्चत्वारः स्पर्शाः सूक्ष्मेषु बादरेषु चानन्तप्रदेशिकस्कन्धेषु भवन्ति, मृदुकठिनगुरुलघुस्पर्शास्तु बादरेष्वेवेति ॥ अष्टादशशते षष्ठः ॥ १८-६ ॥

---

षष्ठोद्देशके नयवादिमतमाश्रित्य वस्तु विचारितं, सप्तमे त्वन्ययूथिकमतमाश्रित्य तद्विचार्यते इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

रायगिहे जाव एवं वयासी—अन्नउत्थिया णं भंते! एवमाइक्खंति जाव परूवेंति-एवं खलु केवली जक्खाएसेणं आतिट्ठे समाणे आहच्च दो भासाओ भासति, तं०—मोसं वा सच्चामोसं वा, से कहमेयं भंते! एवं?, गोयमा! जण्णं ते अन्नउत्थिया जाव जे ते एवमाहंसु मिच्छं ते एवमाहंसु, अहं पुण गोयमा! एवमाइक्खामि ४—नो खलु केवली जक्खाएसेणं आउस्सति, नो खलु केवली जक्खाएसेणं आतिट्ठे समाणे आहच्च दो भासाओ भासति तं०—मोसं वा सच्चामोसं वा, केवली णं असावज्जाओ अपरोवघाइयाओ आहच्च दो भासाओ भासति, तं०—सच्चं वा असच्चामोसं वा ॥ (सूत्रं ६३३) ॥

'रायगिहे'इत्यादि, 'जक्खाएसेणं आइस्सइ'त्ति देवावेशेन 'आविश्यते' अधिष्ठीयत इति, 'नो खलु'इत्यादि, नो खलु केवली यक्षावेशेनाविश्यते अनन्तवीर्यत्वात्तस्य, 'अण्णानिट्ठे'त्ति अन्याविष्टः-परवशीकृतः॥ सत्यादिभाषाद्वयं च भाषमाणः केवली उपधिपरिग्रहप्रणिधानादिकं विचित्रं वस्तु भाषत इति तद्दर्शनार्थमाह—

कतिविहे णं भंते! उवही पण्णत्ते?, गोयमा! तिविहे उवही प०, तं०-कम्मोवही सरीरोवही बाहिरभंडमत्तोवगरणोवही, नेरइयाणं भंते! पुच्छा, गोयमा! दुविहे उवही प० तं०—कम्मोवही य सरीरोवही य, सेसाणं तिविहा उवही एगिंदियवज्जाणं जाव वेमाणियाणं, एगिंदियाणं दुविहे प० तंजहा—कम्मोवही य सरीरोवही य, कतिविहे णं भंते! उवही प० ?, गो० तिविहे उवही प० तंजहा-सचित्ते अचित्ते मीसए, एवं नेरइयाणवि, एवं निरवसेसं जाव वेमाणियाणं। कतिविहे णं भंते! परिग्गहे प० ?, गोयमा! तिविहे परिग्गहे प०, तं०—कम्मपरिग्गहे सरीरपरिग्गहे बाहिरगभंडमत्तोवगरणपरिग्गहे, नेरइयाणं भंते! एवं जहा उवहिणा दो दंडगा भणिया तहा परिग्गहेणवि दो दंडगा भाणियव्वा, [ ग्रन्थाग्रम् ११००० ] कइविहे णं भंते! पणिहाणे प० ?, गोयमा! तिविहे पणिहाणे प०, तं-मणपणिहाणे वइपणिहाणे कायपणिहाणे, नेरइयाणं भंते! कइविहे पणिहाणे प०, एवं चेव, एवं जाव थणियकुमाराणं. पुढविकाइयाणं पुच्छा, गोयमा! एगे कायपणिहाणे प०, एवं जाव वणस्सइकाइयाणं, बेइंदियाणं पुच्छा, गोयमा! दुविहे पणिहाणे प० तं-वइपणिहाणे य कायपणिहाणे य, एवं जाव चउरिंदियाणं, सेसाणं तिविहेवि जाव वेमाणियाणं। कतिविहे णं भंते! दुप्पणिहाणे प० ?, गोयमा! तिविहे

प्र०आ०७४९

दुप्पणिहाणे प०, तं०–मणदुप्पणिहाणे जहेव पणिहाणेणं दंडगो भणिओ तहेव दुप्पणिहाणेणवि भाणियव्वो। कतिविहे णं भंते! सुप्पणिहाणे प० ?, गोयमा! तिविहे सुप्पणिहाणे प०, तंजहा—मणसुप्पणिहाणे वइसुप्पणिहाणे कायसुप्पणिहाणे, मणुस्साणं भंते! कइविहे सुप्पणिहाणे प० ? एवं चेव जाव वेमाणियाणं, सेवं भंते! २ जाव विहरति ॥ तए णं समणे भगवं महावीरे जाव बहिया जणवयविहारं विहरइ ॥ सूत्रं ६३४) ॥

'कतिविहे ण'मित्यादि, तत्र उपधीयते–उपष्टभ्यते येनात्माऽसावुपधिः, 'बाहिरभंडमत्तोवगरणोवही'ति बाह्य–कर्मशरीरव्यतिरिक्ते ये भाण्डमात्रोपकरणे तद्रूपो य उपधिः स तथा, तत्र भाण्डमात्रा–भाजनरूपः परिच्छदः उपकरणं च वस्त्रादीति, 'एगिंदियवज्जाणं'ति एकेन्द्रियाणां भाण्डमात्रादि नास्तीति तद्वर्जितानामन्येषां त्रिविधोऽप्यस्तीति। 'सचित्ते'त्यादि, सचित्तादिद्रव्याणि शरीरादीनि, 'एवं नेरइयाणवि'त्ति अनेनेदं सूचितं–'नेरइयाणं भंते! कइविहे उवही प० ?, गोयमा! तिविहे उवही प०, तंजहा–सचित्ते अचित्ते मीसए'त्ति तत्र नारकाणां सचित्त उपधिः शरीरम् अचित्तः उत्पत्तिस्थानं मिश्रस्तु–शरीरमेवोच्छ्वासादिपुद्गलयुक्तं तेषां सचेतनाचेतनत्वेन मिश्रत्वस्य विवक्षणादिति। 'परिग्गहे'त्ति परिगृह्यत इति परिग्रहः, अथैतस्योपधेश्च को भेदः ?, उच्यते, उपकारक उपधिः ममत्वबुद्ध्या परिगृह्यमाणस्तु परिग्रह इति। 'पणिहाणे'त्ति प्रकर्षेण नियते आलम्बने धानं–धरणं मनःप्रभृतेरिति प्रणिधानम् ॥ एषु च केवलिभाषितेष्वर्थेषु विप्रतिपद्यमानोऽहंमानी मानवो न्यायेन निरसनीय इत्येतत् चरितेन दर्शयन्नाह—

तेणं कालेणं २ रायगिहे नामं नगरे गुणसिलए चेइए वन्नओ जाव पुढवीसिलापट्टओ, तस्स णं गुणसिलस्स चेइयस्स अदूरसामंते बहवे अन्नउत्थिया परिवसंति, तं०–कालोदायी सेलोदायी एवं जहा सत्तमसए अन्नउत्थि-

उद्देसए जाव से कहमेयं मन्ने एवं ?, तत्थ णं रायगिहे नगरे मद्दुए नामं समणोवासए परिवसति अड्ढे जाव अपरिभूए अभिगयजीवा जाव विहरति, तए णं समणे भगवं म० अन्नया कदायि पुव्वाणुपुव्विं चरमाणे जाव समोसढे परिसा पडिगया जाव पज्जुवासति, तए णं मद्दुए समणोवासए इमीसे कहाए लद्धट्ठे समाणे हट्ठतुट्ठजाव हियए ण्हाए जाव सरीरे सयाओ गिहाओ पडिनिक्खमति स० २ पादविहारचारेणं रायगिहं नगरं जाव निग्गच्छति नि० २ तेसिं अन्नउत्थियाणं अदूरसामंतेणं वीयीवयति, तए णं ते अन्नउत्थिया मद्दुयं समणोवासयं अदूरसामंतेणं वीयीवयमाणं पासंति २ अन्नमन्नं सद्दावेंति २ त्ता एवं वयासी—एवं खलु देवाणुप्पिया ! अम्हं इमा कहा अविउप्पकडा इमं च णं मद्दुए समणोवासए अम्हं अदूरसामंतेणं वीयीवयइ तं सेयं खलु देवाणुप्पिया ! अम्हं मद्दुयं समणोवासयं एयमट्ठं पुच्छित्तएत्तिकट्टु अन्नमन्नस्स अंतियं एयमट्ठं पडिसुणेंति अन्नमन्नस्स २ त्ता जेणेव मद्दुए समणोवासए तेणेव उवा० २ मद्दुयं समणोवासयं एवं वदासी—एवं खलु मद्दुया ! तव धम्मायरिए धम्मोवदेसए समणे णायपुत्ते पंच अत्थिकाये पन्नवेइ जहा सत्तमे सए अन्नउत्थिउद्देसए जाव से कहमेयं मद्दुया एवं ?, तए णं से मद्दुए समणोवासए ते अन्नउत्थिए एवं वयासी—जति कज्जं कज्जति जाणामो पासामो अहे कज्जं न कज्जति न जाणामो न पासामो, तए णं ते अन्नउत्थिया मद्दुयं समणोवासयं एवं वयासी—केस णं तुमं मद्दुया ! समणोवासगाणं भवसि जे णं तुमं एयमट्ठं न जाणसि न पाससि ?, तए णं से मद्दुए समणोवासए ते अन्नउत्थिए एवं वयासी—अत्थि णं आउसो ! वाउयाए वाति ?, हंता अत्थि, तुज्झे णं आउसो !

वाउयायस्स वायमाणस्स रूवं पासह ?, णो तिणट्ठे समट्ठे, अत्थि णं आउसो ! घाणसहगया पोग्गला ?, हंता अत्थि, तुज्झे णं आउसो ! घाणसहगयाणं पोग्गलाणं रूवं पासह ?, णो तिणट्ठे०, अत्थि णं भंते ! आउसो ! अरणिसहगये अगणिकाये ?, हंता अत्थि, तुज्झे णं आउसो ! अरणिसहगयस्स अगणिकायस्स रूवं पासह ?, णो ति०, अत्थि णं आउसो ! समुद्दस्स पारगयाइं रूवाइं ?, हंता अत्थि, तुज्झे णं आउसो ! समुद्दस्स पारगयाइं रूवाइं पासह ?, णो ति०, अत्थि णं आउसो ! देवलोगगयाइं रूवाइं ?, हंता अत्थि, तुज्झे णं आउसो ! देवलोगगयाइं रूवाइं पासह ?, णो ति०, एवामेव आउसो !, अहं वा तुज्झे वा अन्नो वा छउमत्थो जइ जो जं न जाणइ न पासइ तं सव्वं न भवति एवं ते सुबहुए लोए ण भविस्सतीत्तिकट्टु ते णं अन्नउत्थिए एवं पडिहणइ, एवं प० २ जेणेव गुणसि० चेइए जेणेव समणे भ० महा० तेणेव उवाग० २ समणं भगवं महावीरं पंचविहेणं अभिगमेणं जाव पज्जुवासति । मद्दुयादी ! समणे भ० महा० मद्दुयं समणोवासगं एवं वयासी—सुट्ठु णं मद्दुया ! तुमं ते अन्नउत्थिए एवं वयासी, साहु णं मद्दुया ! तुमं ते अन्नउ० एवं वयासी, जे णं मद्दुया ! अट्ठं वा हेउं वा पसिणं वा वागरणं वा अन्नायं अदिट्ठं अस्सुतं अमयं अविण्णायं बहुजणमज्झे आघवेति पन्नवेति जाव उवदंसेति से णं अरिहंताणं आसायणाए वट्टति अरिहंतपन्नत्तस्स धम्मस्स आसायणाए वट्टति केवलीणं आसायणाए वट्टति केवलिपन्नत्तस्स धम्मस्स आसायणाए वट्टति तं सुट्ठु णं तुमं मद्दुया ! ते अन्नउ० एवं वयासी, साहु णं तुमं मद्दुया ! जाव एवं वयासी, तए णं मद्दुए समणोवासए समणेणं भग० महा० एवं वु०

समाणे हट्ठतुट्ठे समणं भ० महावीरं वं० न० २ णच्चासन्ने जाव पज्जुवासइ, तए णं सम० भ० म० मद्दुयस्स समणोवासगस्स तीसे य जाव परिसा पडिगया, तए णं मद्दु० समणस्स भ० म० जाव निसम्म हट्ठतुट्ठ० पसिणाइं वागरणाइं पुच्छति प० २ अट्ठाइं परियातिइ २ उट्ठाए उट्ठेइ २ समणं भगवं महा० वं० नमं० २ जाव पडिगए । भंतेत्ति भगवं गोयमे समणे भगवं महा० वं० नमं २ एवं वयासी—पभू णं भंते! मद्दुए समणोवासए देवाणुप्पियाणं अंतियं जाव पव्वइत्तए ?, णो तिणट्ठे समट्ठे, एवं जहेव संखे तहेव अरुणाभे जाव अंतं काहिति ॥ ( सूत्रं ६३५ ) ॥ देवे णं भंते! महड्ढिए जाव महेसक्खे रूवसहस्सं विउव्वित्ता पभू अन्नमन्नेणं सद्धिं संगामं संगामित्तए ?, हंता पभू । ताओ णं भंते! बोंदीओ किं एगजीवफुडाओ अणेगजीवफुडाओ ?, गोयमा! एगजीवफुडाओ णो अणेगजीवफुडाओ, तेसि णं भंते! बोंदीणं अंतरा किं एगजीवफुडा अणेगजीवफुडा ?, गोयमा! एगजीवफुडा नो अणेगजीवफुडा । पुरिसे णं भंते! अंतरेणं हत्थेण वा एवं जहा अट्ठमसए तइए उद्देसए जाव नो खलु तत्थ सत्थं कमति (सूत्रं ६३६) ॥ अत्थि णं भंते! देवासुराणं संगामे २ ?, हंता अत्थि, देवासुरेसु णं भंते! संगामेसु वट्टमाणेसु किन्न तेसिं देवाणं पहरणरयणत्ताए परिणमति ?, गोयमा! जन्नं ते देवा तणं वा कट्ठं वा पत्तं वा सक्करं वा परामुसंति तं तं तेसिं देवाणं पहरणरयणत्ताए परिणमति, जहेव देवाणं तहेव असुरकुमाराणं ?, णो तिणट्ठे समट्ठे, असुरकुमाराणं देवाणं निच्चं विउव्विया पहरणरयणा प० (सूत्रं ६३७) ॥ देवे णं भंते! महड्ढिए जाव महेसक्खे पभू लवणसमुद्दं अणुपरियट्टित्ताणं हव्वमागच्छित्तए ?, हंता पभू, देवे

णं भंते! महड्ढिए एवं धायइसंडं दीवं जाव हंता पभू, एवं जाव रुयगवरं दीवं जाव हंता पभू, ते णं परं वीतीवएज्जा नो चेव णं अणुपरियट्टेज्जा (सूत्रं ६३८)॥ अत्थि णं भंते! ते देवा जे अणंते कम्मंसे जहन्नेणं एक्केण वा दोहिं वा तीहिं वा उक्कोसेणं पंचहिं वाससएहिं खवयंति?, हंता अत्थि, अत्थि णं भंते! ते देवा जे अणंते कम्मंसे जहन्नेणं एक्केण वा दोहिं वा तीहिं वा उक्कोसेणं पंचहिं वाससहस्सेहिं खवयंति?, हंता अत्थि, अत्थि णं भंते! ते देवा जे अणंते कम्मंसे जहन्नेणं एक्केण वा दोहिं वा तीहिं वा उक्कोसेणं पंचहिं वाससयसहस्सेहिं खवयंति?, हंता अत्थि, कयरेणं भंते! ते देवा जे अणंते कम्मंसे जहन्नेणं एक्केण वा जाव पंचहिं वाससएहिं खवयंति?, कयरे णं भंते! ते देवा जाव पंचहिं वाससहस्सेहिं खवयंति?, कयरे णं भंते! ते देवा जाव पंचहिं वाससयसहस्सेहिं खवयंति?, गोयमा! वाणमंतरा देवा अणंते कम्मंसे एगेणं वाससएणं खवयंति, असुरिंदवज्जिया भवणवासी देवा अणंते कम्मंसे दोहिं वाससएहिं खवयंति, असुरकुमारा णं देवा अणंते कम्मंसे तीहिं वाससएहिं खवयंति, गहनक्खत्ततारारूवा जोइसिया देवा अणंते कम्मंसे चउहिं वास जाव खवयंति चंदिमसूरिया जोइसिंदा जोतिसरायाणो अणंते कम्मंसे पंचहिं वाससएहिं खवयंति सोहम्मीसाणगा देवा अणंते कम्मंसे एगेणं वाससहस्सेण जाव खवयंति सणंकुमारमाहिंदगा देवा अणंते कम्मंसे दोहिं वाससहस्सेहिं खवयंति, एवं एएणं अभिलावेणं बंभलोगलंतगा देवा अणंते कम्मंसे तीहिं वाससहस्सेहिं खवयंति महासुक्कसहस्सारगा देवा अणंते० चउहिं वाससह० आणयपाणयआरणअच्चुयगा देवा अणंते० पंचहिं वाससहस्सेहिं खवयंति हिट्ठिमगेविज्जगा

देवा अणंते कम्मंसे एगेणं वाससयसहस्सेणं खवयंति मज्झिमगेवेज्जगा देवा अणंते० दोहिं वाससयसहस्सेहिं जाव खवयंति उवरिमगेवेज्जगा देवा अणंते कम्मंसे तीहिं वासजाव खवयंति विजयवेजयंतजयंतअपराजियगा देवा अणंते० चउहिं वास जाव खवयंति सव्वट्ठसिद्धगा देवा अणंते कम्मंसे पंचहिं वाससयसहस्सेहिं खवयंति, एएणट्ठेणं गो० ते देवा जे अणंते कम्मंसे जहन्नेणं एक्केण वा दोहिं वा तीहिं वा उक्कोसेणं पंचहिं वाससएहिं खवयंति एएणं गो० ते देवा जाव पंचहिं वाससहस्सेहिं खवयंति, एएणट्ठेणं गो० ते देवा जाव पंचहिं वाससयसहस्सेहिं खवयंति । सेवं भंते! सेवं भंते!॥ (सूत्र ६३९) ॥ १८-७ ॥



'तेण'मित्यादि, 'एवं जहा सत्तमसए'इत्यादिना यत्सूचितं तस्यार्थतो लेशो दर्श्यते-कालोदायिसेलोदायिसेवालोदायिप्रभृतिकानामन्ययूथिकानामेकत्र संहितानां मिथः कथासंलापः समुत्पन्नो यदुत महावीरः पञ्चास्तिकायान् धर्मास्तिकायादीन् प्रज्ञापयति, तत्र च धर्माधर्माकाशपुद्गलास्तिकायानचेतनान् जीवास्तिकायं च सचेतनं तथा धर्म्माधर्म्माकाशजीवास्तिकायानरूपिणः पुद्गलास्तिकायं च रूपिणं प्रज्ञापयतीति 'से कहमेयं मन्ने एवं'ति अथ कथमेतद्-धर्म्मास्तिकायादि वस्तु मन्ये इति वितर्कार्थः 'एवं' सचेतनाचेतनादिरूपेण, अदृश्यमानत्वेनासम्भवात्तस्येति हृदयम्, 'अविउप्पकडे'ति अपिशब्दः संभावनार्थः उत्-प्राबल्येन च प्रकृता प्रस्तुता प्रकटा वा उत्प्रकृतोत्प्रकटा वा अथवा अविद्वद्भिः-अजानद्भिः प्रकृता-कृता प्रस्तुता वा अविद्वत्प्रकृता, 'जइ कज्जं कज्जइ जाणामो पासामो'त्ति यदि तैर्धर्मास्तिकायादिभिः कार्यं स्वकीयं क्रियते तदा तेन कार्येण तान् जानीमः पश्यामश्चावगच्छाम इत्यर्थः धूमेनाग्निमिव, अथ कार्यं तैर्न क्रियते तदा न जानीमो न पश्यामश्च, अयमभिप्रायः-कार्यादिलिङ्गद्वारेणैवार्वाग्दृशामतीन्द्रि-

सपदार्थावगमो भवति, न च धर्म्मास्तिकायादीनामस्मत्प्रतीतं किञ्चित् कार्यादिलिङ्गं दृश्यत इति तदभावाच्च जानीम एव वयमिति ॥
अथ मद्दुकं धर्म्मास्तिकायाद्यपरिज्ञानाभ्युपगमवन्तमुपालम्भयितुं यत्ते प्राहुस्तदाह—'केस णं'मित्यादि, क एष त्वं मद्दुक ! श्रमणोपासकानां मध्ये भवसि यस्त्वमेतमर्थं श्रमणोपासकज्ञेयं धर्म्मास्तिकायाद्यस्तित्वलक्षणं न जानासि न पश्यसि ?, न कश्चिदित्यर्थः ॥
अथैवमुपालब्धः सन्नसौ यत्तैरदृश्यमानत्वेन धर्म्मास्तिकायाद्यसम्भव इत्युक्तं तद्विघटनेन तान् प्रतिहन्तुमिदमाह—'अत्थि णं'मित्यादि, 'घाणसहगय'त्ति घ्रायते इति घ्राणो—गन्धगुणस्तेन सहगताः—तत्सहचरितास्तद्वन्तो घ्राणसहगताः 'अरणिसहगए'त्ति अरणिः—अग्न्यर्थं निर्मन्थनीयकाष्ठं तेन सह गतो यः स तथा तं 'सुट्ठु णं मद्दुया ! तुमं'ति सुष्ठु त्वं हे मद्दुक ! येन त्वयाऽस्तिकायानजानता न जानीम इत्युक्तम्, अन्यथा अजानन्नपि यदि जानीम इत्यभणिष्यस्तदाऽर्हदादीनामत्याशातनाकारकोऽभविष्यस्त्वमिति ॥
पूर्वं मद्दुकश्रमणोपासकोऽरुणाभे विमाने देवत्वेनोत्पत्स्यत इत्युक्तम्, अथ देवाधिकाराद्देववक्तव्यतामेवोद्देशकान्तं यावदाह—'देवे णं'मित्यादि, 'तार्सि बोंदीणं अंतरे'त्ति तेषां विकुर्वितशरीराणामन्तराणि 'एवं जहा अट्ठमसए'इत्यादि, अनेन च यत्सूचितं तदिदं—'पाएण वा हत्थेण वा अंगुलियाए वा सिलागाए वा कट्ठेण वा कलिंचेण वा आमुसमाणे वा आलिहमाणे वा विलिहमाणे वा अन्नयरेण वा तिक्खेणं सत्थजाएणं आछिंदमाणे वा विच्छिंदमाणे वा अगणिकाएण वा समोडहमाणे वा तेसिं जीवप्पएसाणं आबाहं वा वाबाहं वा करेइ छविच्छेयं वा उप्पाएइ ?, णो इणट्ठे समट्ठे'त्ति व्याख्या चास्य प्राग्वत् । 'जन्नं देवा तणं वा कट्ठं वा' इत्यादि, इह च यद्देवानां तृणाद्यपि प्रहरणीभवति तदचिन्त्यपुण्यसम्भारवशात् सुभूमचक्रवर्त्तिनः स्थालमिव, असुराणां तु यन्नित्यविकुर्वितानि तानि भवन्ति तद्देवापेक्षया तेषां मन्दतरपुण्यत्वात्तथाविधपुरुषाणामिवेत्यवगन्तव्यमिति । 'वीतीवएज्ज'त्ति एकया दिशा व्य

तिक्रमेत 'नो चेव णं अणुपरियट्टेज्ज'त्ति नैव सर्वतः परिभ्रमेत्, तथाविधप्रयोजनाभावादिति सम्भाव्यते। 'अत्थि णं भंते! इत्यादि, इह देवानां पुण्यकर्म्मपुद्गलाः प्रकृष्टप्रकृष्टतरप्रकृष्टतमानुभागा आयुष्ककर्म्मसहचरिततया वेदनीया अनन्तानन्ता भवन्ति ततश्च सन्ति भदन्त! ते देवा ये तेषामनन्तानन्तकर्मांशानां मध्यादनन्तान् कर्म्मांशान् जघन्येन कालस्याल्पतया एकादिना वर्षशतेन उत्कर्षतस्तु पञ्चभिर्वर्षशतैः क्षपयन्तीत्यादि प्रश्नः, 'गोयमे'त्याद्युत्तरं, तत्र व्यन्तरा अनन्तान् कर्म्मांशान् वर्षशतेनैकेन क्षपयन्ति अनन्तानामपि तदीयपुद्गलानामल्पानुभागतया स्तोकेनैव कालेन क्षपयितुं शक्यत्वात् तथाविधाल्पस्नेहाहारवत्, तथा तावत एव कर्म्मांशान् असुरवर्जितभवनपतयो द्वाभ्यां वर्षशताभ्यां क्षपयन्ति, तदीयपुद्गलानां व्यन्तरपुद्गलापेक्षया प्रकृष्टानुभावत्वेन बहुतरकालेन क्षपयितुं शक्यत्वात् स्निग्धतराहारवदिति, एवमुत्तरत्रापि भावना कार्येति ॥ अष्टादशशते सप्तमोद्देशकः ॥ १८-७ ॥

---

सप्तमोद्देशकान्ते कर्म्मक्षपणोक्ता, अष्टमे तु तद्बन्धो निरूप्यत इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

रायगिहे जाव एवं वयासी—अणगारस्स णं भंते! भावियप्पणो पुरओ दुहओ जुगमायाए पेहाए रीयं रीयमाणस्स पायस्स अहे कुक्कुडपोते वा वट्टापोते वा कुलिंगच्छाए वा परियावज्जेज्जा तस्स णं भंते! किं ईरियावहिया किरिया कज्जइ संपराइया किरिया कज्जइ?, गोयमा! अणगारस्स णं भावियप्पणो जाव तस्स णं ईरियावहिया किरिया कज्जइ, नो संपराइया किरिया कज्जइ, से केणट्ठेणं भंते! एवं वुच्चइ जहा सत्तमसए संवुडुद्देसए जाव अट्ठो निक्खित्तो। सेवं भंते सेवं भंते! जाव विहरति॥ तए णं समणे भगवं महावीरे बहिया जाव विहरति॥ (सूत्रं ६४०)॥

'रायगिहे'इत्यादि, 'पुरओ'त्ति अग्रतः 'दुहओ'त्ति 'द्विधा' अन्तराऽन्तरा पार्श्वतः पृष्ठतश्चेत्यर्थः 'जुगमायाए'त्ति यूपमात्रया दृष्ट्या 'पेहाए'त्ति प्रेक्ष्य २ 'रीयं'ति गतं-गमनं 'रीयमाणस्स'त्ति कुर्वत इत्यर्थः 'कुक्कुडपोयए'त्ति कुक्कुटडिम्भः 'वट्टापोयए'त्ति इह वर्त्तका-पक्षिविशेषः 'कुलिंगच्छाए व'त्ति पिपीलिकादिसदृशः 'परियावज्जेज्ज'त्ति 'पर्यापद्येत' म्रियेत 'एवं जहा सत्तमसए'इत्यादि, अनेन च यत्सूचितं तस्यार्थलेश एवम्-अथ केनार्थेन भदन्त! एवमुच्यते, गौतम! यस्य क्रोधादयो व्यवच्छिन्ना भवन्ति तस्येर्यापथिक्येव क्रिया भवतीत्यादि 'जाव अट्ठो निक्खित्तो'त्ति 'से केणट्ठेणं भंते!' इत्यादिवाक्यस्य निगमनं यावदित्यर्थः, तच्च 'से तेणट्ठेणं गोयमा' इत्यादि ॥ प्राग्गमनमाश्रित्य विचारः कृतः, अथ तदेवाश्रित्यान्ययूथिकमतनिषेधतः स एवोच्यते—

तेणं कालेणं २ रायगिहे जाव पुढविसिलापट्टए तस्स णं गुणसिलस्स चेइयस्स अदूरसामंते बहवे अन्नउत्थिया परिवसंति, तए णं समणे भगवं महा० जाव समोसढे जाव परिसा पडिगया, तेणं कालेणं २ समणस्स भ० म० जेट्ठे अंतेवासी इंदभूतीनामं अणगारे जाव उड्ढंजाणू जाव विहरइ, तए णं ते अन्नउत्थिया जेणेव भगवं गोयमे तेणेव उवागच्छन्ति उवागच्छइत्ता भगवं गोयमं एवं वयासी-तुज्झे णं अज्जो! तिविहंतिविहेणं अस्संजया जाव एगंतबाला यावि भवह, तए णं भगवं गोयमे अन्नउत्थिए एवं वयासी-से केणं कारणेणं अज्जो! अम्हे तिविहंतिविहेणं अस्संजया जाव एगंतबाला यावि भवामो, तए णं ते अन्नउत्थिया भगवं गोयमं एवं वयासी-तुज्झे णं अज्जो! रीयं रीयमाणा पाणे पेच्चेह अभिहणह जाव उवद्दवेह, तए णं तुज्झे पाणे पेच्चेमाणा जाव उवद्दवेमाणा तिविहंतिविहेणं जाव एगंतबाला यावि भवह, तएणं भगवं गोयमे ते अन्नउत्थिए एवं वया-

सी–नो खलु अज्जो! अम्हे रीयं रीयमाणा पाणे पेचेमो जाव उवद्दवेमो, अम्हे णं अज्जो! रीयं रीयमाणा कायं च जोयं च रीयं च पडुच्च दिस्सा २ पदिस्सा २ वयामो, तए णं अम्हे दिस्सा दिस्सा वयमाणा पदिस्सा पदिस्सा वयमाणा णो पाणे पेचेमो जाव णो उवद्दवेमो, तए णं अम्हे पाणे अपेचेमाणा जाव अणोद्दवेमाणा तिविहंतिविहेणं जाव एगंतपंडिया यावि भवामो, तुज्झे णं अज्जो! अप्पणा चेव तिविहंतिविहेणं जाव एगंतबाला यावि भवह, तए णं ते अन्नउत्थिया भगवं गोयमं एवं व०–केणं कारणेणं अज्जो! अम्हे तिविहंतिविहेणं जाव भवामो?, तए णं भगवं गोयमे ते अन्नउत्थिए एवं वयासी–तुज्झे णं अज्जो! रीयं रीयमाणा पाणे पेचेह जाव उवद्दवेह, तए णं तुज्झे पाणे पेचेमाणा जाव उवद्दवेमाणा तिविहं जाव एगंतबाला यावि भवह, तए णं भगवं गोयमे ते अन्नउत्थिए एवं पडिहणइ पडिहणित्ता जेणेव समणे भगवं महा० तेणेव उवाग० २ समणं भगवं महावीरं वंदति नमंसति वंदित्ता नमंसित्ता णच्चासन्ने जाव पज्जुवासति, गोयमादि समणे भगवं महावीरे भगवं गोयमं एवं वयासी–सुट्ठु णं तुमं गो०! ते अन्नउत्थिए एवं व० साहु णं तुमं गोयमा! ते अन्नउत्थिए एवं व० अत्थि णं गो० ममं बहवे अंतेवासी समणा निग्गंथा छउमत्था जे णं नो पभू एयं वागरणं वागरेत्तए जहा णं तुमं तं सुट्ठु णं तुमं गो०! ते अन्नउत्थिए एवं वयासी साहु णं तुमं गो०! ते अन्नउत्थिए एवं वयासी (सूत्रं ६४१).॥ तए णं भगवं गोयमे समणेणं भगवया महावीरेण एवं वुत्ते समाणे हट्ठतुट्ठे समणं भ० म० वं० नमं० एवं वयासी–छउमत्थे णं भंते! मणुस्से परमाणुपोग्गलं किं जाणति पासति उदाहु न जाणति न पासति?, गोयमा! अत्थेगतिए

जाणति न पासति अत्थेगतिए न जाणति न पासति, छउमत्थे णं भंते! मणूसे दुपएसियं खंधं किं जाणति २?, एवं चेव, एवं जाव असंखेज्जपदेसियं, छउमत्थे णं भंते! मणूसे अणंतपएसियं खंधं किं पुच्छा, गोयमा! अत्थेगतिए जाणति पासति १ अत्थेगतिए जाणति न पासति २ अत्थेगतिए न जाणति पासइ ३ अत्थेगतिए न जाणइ न पासति ४ आहोहिए णं भंते! मणुस्से परमाणुपोग्गलं जहा छउमत्थे एवं आहोहिएवि जाव अणंतपदेसियं, परमाहोहिए णं भंते! मणूसे परमाणुपोग्गलं जं समयं जाणति तं समयं पासति जं समयं पासति तं समयं जाणति?, णो तिणट्ठे समट्ठे, से केणट्ठेणं भंते! एवं वुच्चइ परमाहोहिए णं मणूसे परमाणुपोग्गलं जं समयं जाणति नो तं समयं पासति जं समयं पासति नो तं समयं जाणति?, गोयमा! सागारे से नाणे भवइ अणागारे से दंसणे भवइ, से तेणट्ठेणं जाव नो तं समयं जाणति एवं जाव अणंतपदेसियं। केवली णं भंते! मणुस्से परमाणुपोग्गलं जहा परमाहोहिए तहा केवलीवि जाव अणंतपएसियं ॥ सेवं भंते २ त्ति ॥ (सूत्रं ६४२) ॥ १८-८ ॥

'तए ण'मित्यादि, 'पेचेह'त्ति आक्रामथ 'कायं च'त्ति देहं प्रतीत्य व्रजाम इति योगः, देहश्चेद्गमनशक्तो भवति तदा व्रजामो नान्यथा अश्वशकटादिनेत्यर्थः, योगं च-संयमव्यापारं ज्ञानाद्युपष्टम्भकप्रयोजनं भिक्षाटनादि, न तं विनेत्यर्थः, 'रीयं च'त्ति 'गमनं च' अत्वरितादिकं गमनविशेषं 'प्रतीत्य' आश्रित्य, कथमिति?, आह-'दिस्सा दिस्स'त्ति दृष्ट्वा २ 'पदिस्सा पदिस्स'त्ति प्रकर्षेण दृष्ट्वा २॥ प्राक् छद्मस्था एवं व्याकर्तुं न प्रभव इत्युक्तम्, अथ छद्मस्थमेवाश्रित्य प्रश्नयन्नाह—'छउमत्थे'इत्यादि, इह छद्मस्थो निरतिशयो ग्राह्यः 'जाणइ न पासइ'त्ति श्रुतोपयुक्तः श्रुतज्ञानी, श्रुते दर्शनाभावात्, तदन्यस्तु 'न जाणइ न पासइ'त्ति, अनन्तप्रदे-

शिकसूत्रे चत्वारो भङ्गा भवन्ति, जानाति स्पर्शनादिना पश्यति च चक्षुषेत्येकः १, तथाऽन्यो जानाति स्पर्शादिना न पश्यति चक्षुषा चक्षुषोऽभावादिति द्वितीयः २, तथाऽन्यो न जानाति स्पर्शाद्यगोचरत्वात् पश्यति चक्षुषेति तृतीयः ३, तथाऽन्यो न जानाति न पश्यति चाविषयत्वादिति चतुर्थः ४॥ छद्मस्थाधिकाराच्छद्मस्थविशेषभूताधोऽवधिकपरमाधोऽवधिकसूत्रे ॥ परमावधिकश्चावश्यमन्तर्मुहूर्त्तेन केवली भवतीति केवलिसूत्रं, तत्र च 'सागारे से नाणे भवति'त्ति 'साकारं'विशेषग्रहणस्वरूपं 'से'तस्य परमाधोऽवधिकस्य तदा ज्ञानं भवति, तद्विपर्ययभूतं च दर्शनमतः परस्परविरुद्धयोरेकसमये नास्ति सम्भव इति ॥ अष्टादशशतेऽष्टमः ॥ १८-८ ॥

---

अष्टमोद्देशकान्ते केवली प्ररूपितः, स च भव्यद्रव्यसिद्ध इत्येवं भव्यद्रव्याधिकारान्नवमे भव्यद्रव्यनारकादयोऽभिधीयन्ते इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

रायगिहे जाव एवं वयासी—अत्थि णं भंते ! भवियदव्वनेरइया भवि० १, हंता अत्थि, से केणट्ठेणं भंते ! एवं वुच्चइ भवियदव्वनेर० भ० १, जे भविए पंचिंदिए तिरिक्खजोणिए वा मणुस्से वा नेरइएसु उववज्जित्तए से तेण०, एवं जाव थणियकु०, अत्थि णं भंते ! भवियदव्वपुढवि० भ० २ १, हंता अत्थि, से केण० गो० ! जे भविए तिरिक्खजोणिए वा मणुस्से वा देवे वा पुढविकाइएसु उवव० से तेण० आउक्काइयवणस्सइकाइयाणं एवं चेव उववाओ, तेउवाउबेइंदियतेइंदियचउरिंदियाण य जे भविए तिरिक्खजोणिए वा मणुस्से वा, पंचिंदियतिरिक्खजोणियाणं जे भविए नेरइए वा तिरिक्खजोणिए वा मणुस्से वा देवे वा पंचिंदियतिरिक्खजोणिए वा, एवं मणु-

स्साવि, वाणमंतरजोइसियवेमाणियाणं जहा नेरइया ॥ भवियदव्वनेरइयस्स णं भंते ! केवतियं कालं ठिती पन्नत्ता ?, गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडी, भवियदव्वअसुरकुमारस्स णं भंते ! केवतियं कालं ठिती पन्नत्ता ?, गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं तिन्नि पलिओवमाइं, एवं जाव थणियकुमारस्स । भवियदव्वपुढविकाइयस्स णं पुच्छा, गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं सातिरेगाइं दो सागरोवमाइं, एवं आउक्काइयस्सवि, तेउवाऊ जहा नेरइयस्स, वणस्सइकाइयस्स जहा पुढविकाइयस्स, बेइंदियस्स तेइंदियस्स चउरिंदियस्स जहा नेरइयस्स, पंचिंदियतिरिक्खजोणियस्स जहन्नेणं अंतोमुहुत्तं उक्कोसेणं तेत्तीसं सागरोवमाइं, एवं मणुस्सावि, वाणमंतरजोइसियवेमाणियस्स जहा असुरकुमारस्स ॥ सेवं भंते ! सेवं भंतेत्ति ॥(सूत्रं ६४३)॥ १८-९

'रायगिहे'इत्यादि, 'भवियदव्वनेरइय'त्ति द्रव्यभूता नारका द्रव्यनारकाः, ते च भूतनारकपर्यायतयाऽपि भवन्तीति भव्यशब्देन विशेषिताः, भव्याश्च ते द्रव्यनारकाश्चेति विग्रहः. ते चैकभविकबद्धायुष्काभिमुखनामगोत्रभेदा भवन्ति ॥ 'भवियदव्वनेरइयस्से'त्यादि, 'अंतोमुहुत्तं'ति सञ्ज्ञिनमसञ्ज्ञिनं वा नरकगामिनमन्तर्मुहूर्त्तायुषमपेक्ष्यान्तर्मुहूर्त्तं स्थितिरुक्ता, 'पुव्वकोडि'त्ति मनुष्यं पञ्चेन्द्रियतिर्यञ्चं चाश्रित्येति, भव्यद्रव्यासुरादीनामपि जघन्या स्थितिरित्थमेव, उत्कृष्टा तु 'तिन्नि पलिओवमाइं'ति उत्तरकुर्वादिमिथुनकनरादीनाश्रित्योक्ता, यतस्ते मृता देवेषूत्पद्यन्त इति, द्रव्यपृथिवीकायिकस्य 'साइरेगाइं दो सागरोवमाइं'ति ईशानदेवमाश्रित्योक्ता, द्रव्यतेजसो द्रव्यवायोश्च 'जहा नेरइयस्स'त्ति अन्तर्मुहूर्त्तमेकाऽन्या च पूर्वकोटी, देवादीनां मिथुनकानां च तत्रानुत्पादादिति । पञ्चेन्द्रियतिरश्चः, 'उक्कोसेणं तेत्तीसं सागरोवमाइं'ति सप्तमपृथिवीनारकापेक्षयोक्तमिति ॥ अष्टादशशते नवमः

नवमोद्देशकान्ते भव्यद्रव्यनारकादिवक्तव्यतोक्ता, अथ भव्यद्रव्याधिकाराद्भव्यद्रव्यदेवस्यानगारस्य वक्तव्यता दशमे उच्यते, इत्येवंसम्बद्धस्यास्येदमादिसूत्रम्—

रायगिहे जाव एवं वयासी—अणगारे णं भंते! भावियप्पा असिधारं वा खुरधारं वा ओगाहेज्जा ?, हंता उग्गाहेज्जा, से णं तत्थ छिज्जेज्ज वा भिज्जेज्ज वा ?, णो तिणट्ठे समट्ठे, णो खलु तत्थ सत्थं कमइ, एवं जहा पंचमसए परमाणुपोग्गलवत्तव्वया जाव अणगारे णं भंते! भावियप्पा उदावत्तं वा जाव नो खलु तत्थ सत्थं कमइ ॥ ( सूत्रं ६४४ ) ॥

'रायगिहे'इत्यादि, इह चानगारस्य क्षुरधारादिषु प्रवेशो वैक्रियलब्धिसामर्थ्यादवसेयः, 'एवं जहा पंचमसए'इत्यादि, अनेन च यत्सूचितं तदिदम्—'अणगारे णं भंते! भावियप्पा अगणिकायस्स मज्झंमज्झेणं वीइवएज्जा ?, हंता वीइवएज्जा, से णं तत्थ झियाएज्जा ?, नो इणट्ठे समट्ठे, नो खलु तत्थ सत्थं कमइ'इत्यादि ॥ पूर्वमनगारस्यासिधारादिष्ववगाहनोक्ता, अथावगाहनामेव स्पर्शनालक्षणपर्यायान्तरेण परमाण्वादिष्वभिधातुमाह—

परमाणुपोग्गले णं भंते! वाउयाएणं फुडे वाउयाए वा परमाणुपोग्गलेणं फुडे ?, गोयमा! परमाणुपोग्गले वाउयाएणं फुडे नो वाउयाए परमाणुपोग्गलेणं फुडे। दुप्पएसिए णं भंते! खं० वाउयाएणं एवं चेव एवं जाव असंखेज्जपएसिए ॥ अणंतपएसिए णं भंते! खंधे वाउपुच्छा, गोयमा! अणंतपएसिए खंधे वाउयाएणं फुडे वाउयाए अणंतपएसिएणं खंधेणं सिय फुडे सिय नो फुडे ॥ वत्थी णं भंते! वाउयाएणं फुडे वाउयाए वत्थिणा

फुडे ?, गोयमा ! वत्थी वाउयाएणं फुडे नो वाउयाए वत्थिणा फुडे ॥ (सूत्रं ६४५) ॥

'परमाणुपोग्गले ण'मित्यादि, 'वाउयाएणं फुडे'त्ति परमाणुपुद्गलो वायुकायेन 'स्पृष्टः' व्याप्तो मध्ये क्षिप्त इत्यर्थः 'नो वाउयाए'इत्यादि, नो वायुकायः परमाणुपुद्गलेन 'स्पृष्टः' व्याप्तो मध्ये क्षिप्तो, वायोर्महत्त्वाद् अणोश्च निष्प्रदेशत्वेनातिसूक्ष्मतया व्यापकत्वाभावादिति ॥ 'अणंतपएसिए ण'मित्यादि, अनन्तप्रदेशिकः स्कन्धो वायुना व्याप्तो भवति सूक्ष्मतरत्वात्तस्य वायुकायः पुनरनन्तप्रदेशिकस्कन्धेन स्याद् व्याप्तः स्यान्न व्याप्तः, कथम् ?, यदा वायुस्कन्धापेक्षया महानसौ भवति तदा वायुस्तेन व्याप्तो भवत्यन्यदा तु नेति ॥ 'वत्थी'त्यादि, 'वस्तिः' दृतिर्वायुकायेन 'स्पृष्टः' व्याप्तः सामस्त्येन तद्विवरपरिपूरणात् नो वायुकायो वस्तिना स्पृष्टो वस्तेर्वायुकायस्य परित एव भावात् ॥ अनन्तरं पुद्गलद्रव्याणि स्पृष्टत्वधर्म्मतो निरूपितानि, अथ वर्णादिभिस्तान्येव निरूपयन्नाह-

अत्थि णं भंते ! इमीसे रयणप्पभाए पुढ० अहे दव्वाइं वन्नओ कालनीललोहियहालिदसुक्किलाइं गंधओ सुब्भिगंधाइं दुब्भिगंधाइं रसओ तित्तकडुयकसायअंबिलमहुराइं फासओ कक्खडमउयगरुयलहुयसीयउसिणनिद्धलुक्खाइं अन्नमन्नबद्धाइं अन्नमन्नपुट्ठाइं जाव अन्नमन्नघडत्ताए चिट्ठंति ?, हंता अत्थि, एवं जाव अहेसत्तमाए। अत्थि णं भंते ! सोहम्मस्स कप्पस्स अहे एवं चेव एवं जाव ईसिपब्भाराए पुढ० । सेवं भंते ! २ जाव विहरइ । तए णं समणे भगवं महावीरे जाव बहिया जणवयविहारं विहरति ॥ (सूत्रं ६४६) ॥

'अत्थी'त्यादि, 'अन्नमन्नबद्धाइं'ति गाढाश्लेषतः 'अन्नमन्नपुट्ठाइं'ति अगाढाश्लेषतः यावत्करणात् 'अन्नमन्नओगाढाइं'ति एकक्षेत्राश्रितानीत्यादि दृश्यम्, 'अन्नमन्नघडत्ताए'त्ति परस्परसमुदायतया ॥ अनन्तरं पुद्गलद्रव्याणि निरूपितानि, अथात्मद्र-



प्र०आ०७५७

व्यधर्म्मविशेषानात्मद्रव्यं च संविधानकद्वारेण निरूपयन्निदमाह—

तेणं कालेणं २ वाणियगामे नामं नगरे होत्था वन्नओ, दूतिपलासए चेतिए वन्नओ, तत्थ णं वाणियगामे नगरे सोमिले नामं माहणे परिवसति अड्ढे जाव अपरिभूए रिउव्वेदजाव सुपरिनिट्ठिए पंचण्हं खंडियसयाणं सयस्स कुडुंबस्स आहेवच्चं जाव विहरति, तए णं समणे भगवं महावीरे जाव समोसढे जाव परिसा पज्जुवासति, तए णं तस्स सोमिलस्स माहणस्स इमीसे कहाए लद्धट्ठस्स समाणस्स अयमेयारूवे जाव समुप्पज्जित्था—एवं खलु समणे णायपुत्ते पुव्वाणुपुव्विं चरमाणे गामाणुगामं दूइज्जमाणे सुहंसुहेणं जाव इहमागए जाव दूतिपलासए चेइए अहापडिरूवं जाव विहरइ तं गच्छामि णं समणस्स नायपुत्तस्स अंतियं पाउब्भवामि इमाइं च णं एयारूवाइं अट्ठाइं जाव वागरणाइं पुच्छिस्सामि, तं जइ इमे से इमाइं एयारूवाइं अट्ठाइं जाव वागरणाइं वागरेहिति ततो णं वंदिहामि नमंसिहामि जावपज्जुवासिहामि, अहमेयारूवाइं अट्ठाइं जाव वागरणाइं नो वागरेहिति तो णं एएहिं चेव अट्ठेहि य जाव वागरणेहि य निप्पट्ठपसिणवागरणं करेस्सामीतिकट्टु एवं संपेहेइ २ ण्हाए जाव सरीरे साओ गिहाओ पडिनिक्खमति पडि०२ पायविहारचारेणं एगेणं खंडियसएणं सद्धिं संपरिवुडे वाणियगामं नगरं मज्झंमज्झेणं निग्गच्छइ २ जेणेव दूतिपलासए चेइए जेणेव समणे भग० म० तेणेव उवा० २ समणस्स ३ अदूरसामंते ठिच्चा समणं भगवं म० एवं वयासी—जत्ता ते भंते! जवणिज्जं० अव्वाबाहं० फासुयविहारं० ?, सोमिला! जत्तावि मे जवणिज्जंपि मे अव्वाबाहंपि मे फासुयविहारंपि मे, किं ते भंते! जत्ता ?, सोमिला! जं मे तवनिय-

मसंजमसज्झायझाणावस्सयमादीएसु जोगेसु जयणा सेत्तं जत्ता, किं ते भंते ! जवणिज्जं ?, सोमिला ! जवणिज्जे दुविहे पं०, तं०–इंदियजवणिज्जे य नोइंदियजवणिज्जे य, से किं तं इंदियजवणिज्जे ?, २ जं मे सोइंदियचक्खिंदियघाणिंदियजिब्भिंदियफासिंदियाइं निरुवहयाइं वसे वट्टंति सेत्तं इंदियजवणिज्जे, से किं तं नोइंदियजवणिज्जे?, २ जं मे कोहमाणमायालोभा वोच्छिन्ना नो उदीरेंति सेत्तं नोइंदियजवणिज्जे, सेत्तं जवणिज्जे, किं ते भंते ! अव्वाबाहं?, सोमिला ! जं मे वातियपित्तियसिंभियसन्निवाइया विविहा रोगायंका सरीरगया दोसा उवसंता नो उदीरेंति सेत्तं अव्वाबाहं, किं ते भंते ! फासुयविहारं ?, सोमिला ! जन्नं आरामेसु उज्जाणेसु देवकुलेसु सभासु पवासु इत्थीपसुपंडगविवज्जियासु वसहीसु फासुएसणिज्जं पीढफलगसेज्जासंथारगं उवसंपज्जित्ताणं विहरामि सेत्तं फासुयविहारं ॥ सरिसवा ते भंते ! किं भक्खेया अभक्खेया ?, सोमिला ! सरिसवा भक्खेयावि अभक्खेयावि, से केणट्ठे० सरिसवा मे भक्खेयावि अभक्खेयावि ?, से नूणं ते सोमिला ! बंभन्नएसु नएसु दुविहा सरिसवा पन्नत्ता, तंजहा–मित्तसरिसवा य धन्नसरिसवा य, तत्थ णं जे ते मित्तसरिसवा ते तिविहा पं०, तं०–सहजायया सहवड्ढियया सहपंसुकीलियया, ते णं समणाणं निग्गंथाणं अभक्खेया, तत्थ णं जे ते धन्नसरिसवा ते दुविहा प०, तं०–सत्थपरिणया य असत्थपरिणया य, तत्थ णं जे ते असत्थपरिणया ते णं समणाणं निग्गंथाणं अभक्खेया, तत्थ णं जे से सत्थपरिणया ते दुविहा पं०, तं०–एसणिज्जा य अणेसणिज्जा य, तत्थ णं जे ते अणेसणिज्जा ते णं समणाणं निग्गंथाणं अभक्खेया, तत्थ णं जे ते एसणिज्जा ते दुविहा प० तं०–जाइया य अजाइया

य, तत्थ णं जे ते अजाइया ते णं समणाणं निग्गंथाणं अभक्खेया, तत्थ णं जे ते जातिया ते दुविहा प०, तं- लद्धा य अलद्धा य, तत्थ णं जे ते अलद्धा ते णं समणाणं निग्गंथाणं अभक्खेया, तत्थ णं जे ते लद्धा ते णं समणाणं निग्गंथाणं भक्खेया, से तेणट्ठेणं सोमिला! एवं वुच्चइ जाव अभक्खेयावि। मासा ते भंते! किं भक्खेया अभक्खेया?, सोमिला! मासा मे भक्खेयावि अभक्खेयावि, से केणट्ठेणं जाव अभक्खेयावि, से नूणं ते सोमिला! बंभन्नएसु नएसु दुविहा मासा प०, तं०-दव्वमासा य कालमासा य, तत्थ णं जे ते कालमासा ते णं सावणादीया आसाढपज्जवसाणा दुवालस, तं०-सावणे भद्दवए आसोए कत्तिए मग्गसिरे पोसे माहे फागुणे चित्ते वइसाहे जेट्ठामूले आसाढे, ते णं समणाणं निग्गंथाणं अभक्खेया, तत्थ णं जे ते दव्वमासा ते दुविहा प० तं०-अत्थमासा य धण्णमासा य, तत्थ णं जे ते अत्थमासा ते दुविहा प० तं०-सुवन्नमासा य रुप्पमासा य, ते णं समणाणं निग्गंथाणं अभक्खेया, तत्थ णं जे ते धन्नमासा ते दुविहा प० तं०-सत्थपरिणया य असत्थपरिणया य एवं जहा धन्नसरिसवा जाव से तेणट्ठेणं जाव अभक्खेयावि। कुलत्था ते भंते! किं भक्खेया अभक्खेया?, सोमिला! कुलत्था भक्खेयावि अभक्खेयावि, से केणट्ठेणं जाव अभक्खेयावि?, से नूणं सोमिला! ते बंभन्नएसु नएसु दुविहा कुलत्था प० तं०-इत्थिकुलत्था य धन्नकुलत्था य, तत्थ णं जे ते इत्थिकुलत्था ते तिविहा पं०, तंजहा-कुलकन्नयाइ वा कुलवहूयाति वा कुलमाउयाइ वा, ते णं समणाणं निग्गंथाणं अभक्खेया, तत्थ णं जे ते धन्नकुलत्था एवं जहा धन्नसरिसवा से तेणट्ठेणं जाव अभक्खेयावि ॥ (सूत्रं ६४७) ॥

'तेण'मित्यादि, 'इमाइं च णं'ति इमानि च वक्ष्यमाणानि यात्रायापनीयादीनि 'जत्त'त्ति यानं यात्रा—संयमयोगेषु प्रवृत्तिः 'जवणिज्जं'ति यापनीयं—मोक्षाध्वनि गच्छतां प्रयोजक इन्द्रियादिवश्यतारूपो धर्म्मः 'अव्वाबाहं'ति शरीरबाधानामभावः 'फासुयविहारं'ति प्रासुकविहारो—निर्जीव आश्रय इति, 'तवनियमसंजमसज्झायझाणावस्सयमाइएसु'त्ति इह तपः—अनशनादि नियमाः—तद्विषया अभिग्रहविशेषाः यथा एतावत्तपःस्वाध्यायवैयावृत्त्यादि मयाऽवश्यं रात्रिन्दिवादौ विधेयमित्यादिरूपाः संयमः—प्रत्युपेक्षादिः स्वाध्यायो—धर्मकथादिः ध्यानं—धर्म्मादिः आवश्यकं—षड्विधं, एतेषु च यद्यपि भगवतः किञ्चिन्न तदानीं विशेषतः संभवति तथाऽपि तत्फलसद्भावात्तदस्तीत्यवगन्तव्यं, 'जयण'त्ति प्रवृत्तिः 'इंदियजवणिज्जं'ति इन्द्रियविषयं यापनीयं—वश्यत्वमिन्द्रिययापनीयं, एवं नोइन्द्रिययापनीयं, नवरं नोशब्दस्य मिश्रवचनत्वादिन्द्रियैर्मिश्राः सहार्थत्वाद्वा इन्द्रियाणां सहचरिता नोइन्द्रियाः कषायाः, एषां च यात्रादिपदानां सामयिकगम्भीरार्थत्वेन भगवतस्तदर्थपरिज्ञानमसम्भावयता तेनापभ्राजनार्थं प्रश्नः कृत इति ॥ 'सरिसव'त्ति एकत्र प्राकृतशैल्या सदृशवयसः—समानवयसः अन्यत्र सर्षपाः—सिद्धार्थकाः, 'दव्वमास'त्ति द्रव्यरूपा मासाः 'कालमास'त्ति कालरूपा मासाः, 'कुलत्थ'त्ति एकत्र कुले तिष्ठन्तीति कुलस्थाः—कुलाङ्गनाः, अन्यत्र कुलत्थाः धान्यविशेषाः, सरिसवादिपदप्रश्नश्च छलग्रहणेनोपहासार्थं कृत इति ॥ अथ चर्चां विमुच्य भगवतो वस्तुतत्त्वज्ञानजिज्ञासयाऽऽह—



एगे भवं दुवे भवं अक्खए भवं अव्वए भवं अवट्ठिए भवं अणेगभूयभावभविए भवं ?, सोमिला ! एगेवि अहं जाव अणेगभूयभावभविएवि अहं, से केणट्ठेणं भंते ! एवं वुच्चइ जाव भविएवि अहं ?, सोमिला ! दव्वट्ठयाए एगे अहं नाणदंसणट्ठयाए दुविहे अहं पएसट्ठयाए अक्खएवि अहं अव्वएवि अहं अवट्ठिएवि अहं उवयोग-

ट्ठयाए अणेगभूयभावभविएवि अहं, से तेणट्ठेणं जाव भविएवि अहं, एत्थ णं से सोमिले माहणे . . मणं भगवं महावीरं जहा खंदओ जाव से जहेयं तुज्झे वदह जहा णं देवाणुप्पियाणं अंतिए बहवे राईसर ए हा रायप्पसेणइज्जे चित्तो जाव दुवालसविहं सावगधम्मं पडिवज्जति पडिवज्जित्ता समणं भगवं महावीरं ति जाव पडिगए, तए णं से सोमिले माहणे समणोवासए जाए अभिगयजीवा जाव विहरइ। भंतेत्ति भगवं गोयमे समणं भगवं महावीरं वंदति नमं० वं० नमं० पभू णं भंते! सोमिले माहणे देवाणुप्पियाणं अंतिए मुंडे भवित्ता जहेव संखे तहेव निरवसेसं जाव अंतं काहिति। सेवं भंते! २ त्ति जाव विहरति॥ (सूत्रं ६४८)॥ १८-१०॥ अट्ठारसमं सयं समत्तं॥ १८॥

'एगे भव'मित्यादि, एको भवानित्येकत्वाभ्युपगमे भगवताऽऽत्मनः कृते श्रोत्रादिविज्ञानानामवयवानां चात्मनोऽनेकतोपलब्धित एकत्वं दूषयिष्यामीति बुद्ध्या पर्यनुयोगः सोमिलभट्टेन कृतः, द्वौ भवानिति च द्वित्वाभ्युपगमेऽहमित्येकत्वविशिष्टस्यार्थस्य द्वित्वविरोधेन द्वित्वं दूषयिष्यामीति बुद्ध्या पर्यनुयोगो विहितः, 'अक्खए भव'मित्यादिना च पदत्रयेण नित्यात्मपक्षः पर्यनुयुक्तः, 'अणेगभूयभावभविए भवं'ति अनेके भूता-अतीताः भावाः-सत्तापरिणामा भव्याश्च-भाविनो यस्य स तथा, अनेन चातीतभविष्यत्सत्ताप्रश्नेनानित्यतापक्षः पर्यनुयुक्तः, एकतरपरिग्रहे तस्यैव दूषणायेति, तत्र च भगवता स्याद्वादस्य निखिलदोषगोचरातिक्रान्तत्वात्तमवलम्ब्योत्तरमदायि-'एगेवि अह'मित्यादि, कथमित्येतदिति?, अत आह-'दव्वट्ठयाए एगोऽहं'ति जीवद्रव्यस्यैकत्वेनैकोऽहं न तु प्रदेशार्थतया, तथा हि अनेकत्वान्ममेत्यवयवादीनामनेकत्वोपलम्भो न बाधकः, तथा कञ्चित्स्वभावमाश्रित्यैकत्वसङ्ख्या-

विशिष्टस्यापि पदार्थस्य स्वभावान्तरद्वयापेक्षया द्वित्वमपि न विरुद्धमित्यत उक्तं-'नाणदंसणट्टयाए दुवेवि अहं'ति, न चैकस्य स्वभावभेदो न दृश्यते, एको हि देवदत्तादिः पुरुष एकदैव तत्तदपेक्षया पितृत्वपुत्रत्वभ्रातृत्वभ्रातृव्यत्वादीननेकान् स्वभावाँल्लभत इति, तथा प्रदेशार्थतयाऽसङ्ख्येयप्रदेशतामाश्रित्याक्षतोऽप्यहं सर्वथा प्रदेशानां क्षयाभावात्, तथाऽव्ययोऽप्यहं कतिपयानामपि च व्ययाभावात्, किमुक्तं भवति ?—अवस्थितोऽप्यहं-नित्योऽप्यहम्, असङ्ख्येयप्रदेशिता हि न कदाचनापि व्यपैति अतो नित्यताऽभ्युपगमेऽपि न दोषः, तथा 'उवओगट्टयाए'त्ति विविधविषयानुपयोगानाश्रित्यानेकभूतभावभविकोऽप्यहम्, अतीतानागतयोर्हि कालयोरनेकविषयबोधानामात्मनः कथञ्चिदभिन्नानां भूतत्वाद् भावित्वाच्चेत्यनित्यपक्षोऽपि न दोषायेति । 'एवं जहा रायप्पसेणइज्जे' इत्यादि, अनेन च यत्सूचितं तस्यार्थलेशो दर्श्यते—यथा देवानांप्रियाणामन्तिके बहवो राजेश्वरतलवरादयस्त्यक्त्वा हिरण्यसुवर्णादि मुण्डा भूत्वाऽगारादनगारितां प्रव्रजन्ति न खलु तथा शक्नोमि प्रव्रजितुमितीच्छाम्यहमणुव्रतादिकं गृहिधर्म्मं भगवदन्तिके प्रतिपत्तुं, ततो भगवानाह—यथासुखं देवानांप्रिय ! मा प्रतिबन्धोऽस्तु, ततस्तमसौ प्रत्यपद्यत इति ॥ अष्टादशशते दशमः ॥ १८-१० ॥ अष्टादशं शतं च वृत्तितः परिसमाप्तमिति ॥ १८ ॥

अष्टादशशतवृत्तिर्विहिता वृत्तानि वीक्ष्य वृत्तिकृताम् । प्राकृतनरो ह्यदृष्टं न कर्म्म कर्त्तुं प्रभुर्भवति ॥ १ ॥

व्याख्यातमष्टादशशतम्, अथावसरायातमेकोनविंशतितमं व्याख्यायते, तत्र चादावेवोद्देशकसङ्ग्रहाय गाथा—

लेस्सा य १ गब्भ २ पुढवी ३ महासवा ४ चरम ५ दीव ६ भवणा ७ य। निव्वत्ति ८ करण ९ वणचरसुरा १० य एगूणवीसइमे ॥ ८१ ॥ रायगिहे जाव एवं वयासी—कति णं भंते! लेस्साओ पन्नत्ताओ?, गोयमा! छल्लेस्साओ पन्नत्ताओ, तंजहा—एवं जहा पन्नवणाए चउत्थो लेसुद्देसओ भाणियव्वो निरवसेसो। सेवं भंते २ ॥ ( सूत्रं ६४९ ) ॥ १९-१ ॥

'लेस्से'त्यादि, तत्र 'लेस्सा य'त्ति लेश्याः प्रथमोद्देशके वाच्या इत्यसौ लेश्योदेशक एवोच्यते, एवमन्यत्रापि १ च शब्दः समुच्चये, 'गब्भ'त्ति गर्भाभिधायको द्वितीयः २ 'पुढवि'त्ति पृथिवीकायिकादिवक्तव्यतार्थस्तृतीयः ३ 'महासव'त्ति नारका महाश्रवा महाक्रिया इत्याद्यर्थपरश्चतुर्थः ४, 'चरम'त्ति चरमेभ्योऽल्पस्थितिकेभ्यो नारकादिभ्यः परमा—महास्थितयो महाकर्म्मतरा इत्याद्यर्थप्रतिपादनार्थः पञ्चमः ५, 'दीव'त्ति द्वीपाद्यभिधानार्थः षष्ठः ६ 'भवणा य'त्ति भवनाद्यर्थाभिधानार्थः सप्तमः ७ 'निव्वत्ति'त्ति निर्वृत्तिः—निष्पत्तिः शरीरादेस्तदर्थोऽष्टमः ८ 'करण'त्ति करणार्थो नवमः ९ 'वणचरसुरा य'त्ति वनचरसुरा—व्यन्तरा देवास्तद्वक्तव्यतार्थो दशम इति १०, तत्र प्रथमोद्देशकस्तावद्व्याख्यायते, तस्य चेदमादिसूत्रम्—'रायगिहे'इत्यादि, 'पन्नवणाए चउत्थो लेसुद्देसओ भाणियव्वो'त्ति प्रज्ञापनायाश्चतुर्थो लेश्यापदस्य सप्तदशस्योद्देशको लेश्योद्देशक इह स्थाने भणितव्यः, स च—'कण्हलेसा जाव सुक्कलेसा'इत्यादिरिति ॥ एकोनविंशतितमशते प्रथम उद्देशकः समाप्तः ॥ १९-१ ॥

अथ लेश्याऽधिकारवानेव द्वितीयः, तस्य चेदमादिसूत्रम्—

कति णं भंते! लेस्साओ प०? एवं जहा पन्नवणाए गब्भुद्देसो सो चेव निरवसेसो भाणियव्वो। सेवं भंते! सेवं भंते! (सूत्रं ६५०) ॥ १९-२ उद्देशकः ॥

'कइ ण'मित्यादि, 'एवं जहा पन्नवणाए'इत्यादि, 'एवम्' अनेन क्रमेण यथा प्रज्ञापनायां गर्भोद्देशके-गर्भसूत्रोपलक्षितोद्देशके सप्तदशपदस्य षष्ठे सूत्रं तथेह वाच्यं, तन्न्यूनाधिकत्वपरिहारार्थमाह—स एव गर्भोद्देशको निरवशेषो भणितव्य इति, अनेन च यत्सूचितं तदिदं—'गोयमा! छल्लेस्साओ पन्नत्ताओ, तंजहा—कण्हलेस्सा जाव सुक्कलेस्सा, मणुस्साणं भंते! कइ लेस्साओ प०?, गोयमा! छल्लेस्साओ पन्नत्ताओ, तंजहा—कण्हलेस्सा जाव सुक्कलेस्सा'इत्यादीति, यानि च सूत्राण्याश्रित्य गर्भोद्देशकोऽयमुक्तस्तानीमानि 'कण्हलेस्से णं भंते! मणुस्से कण्हलेस्सं गब्भं जणेज्जा?, हंता गोयमा! जणेज्जा। कण्हलेस्से णं भंते! मणूसे नीललेसं गब्भं जणेज्जा? हंता गोयमा! जणेज्जा' इत्यादीति ॥ एकोनविंशतितमशते द्वितीयः ॥ १९-२ ॥

---

द्वितीयोद्देशके लेश्या उक्ताः, तद्युक्ताश्च पृथिवीकायिकादित्वेनोत्पद्यन्त इति पृथिवीकायिकादयस्तृतीये निरूप्यन्त इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

रायगिहे जाव एवं वयासी—सिय भंते! जाव चत्तारि पंच पुढविकाइया एगयओ साधारणसरीरं बंधंति एग० २ तओ पच्छा आहारेंति वा परिणामेंति वा सरीरं वा बंधंति?, नो इणट्ठे समट्ठे, पुढविकाइयाणं पत्तेयाहारा



प०आ०७६१

पत्तेयपरिणामा पत्तेयं सरीरं बंधंति प० २ ततो पच्छा आहारेंति वा परिणामेंति वा सरीरं वा बंधंति १ तेसि णं भंते! जीवाणं कति लेस्साओ प० ?, गोयमा! चत्तारि लेस्साओ० प०, तं०—कण्हलेस्सा नील० काउ० तेउ० २, ते णं भंते! जीवा किं सम्मदिट्ठी मिच्छादिट्ठी सम्मामिच्छादिट्ठी ?, गोयमा! नो सम्मदिट्ठी मिच्छादिट्ठी नो सम्मामिच्छदिट्ठी ३, ते णं भंते! जीवा किं नाणी अन्नाणी ?, गोयमा! नो नाणी अन्नाणी, नियमा दुअन्नाणी, तं०—मइअन्नाणी य सुयअन्नाणी य ४, ते णं भंते! जीवा किं मणजोगी वयजोगी कायजोगी ?, गोयमा! नो मणजोगी नो वयजोगी कायजोगी ५, ते णं भंते! जीवा किं सागारोवउत्ता अणागारोवउत्ता ?, गोयमा! सागारोवउत्तावि अणागारोवउत्तावि ६, ते णं भंते! जीवा किमाहारमाहारेंति ?, गोयमा! दव्वओ णं अणंतपदेसियाइं दव्वाइं एवं जहा पन्नवणाए पढमे आहारुद्देसए जावसव्वप्पणयाए आहारमाहारेंति ७, ते णं भन्ते! जीवा जमाहारेंति तं चिज्जंति जं नो आहारेंति तं नो चिज्जंति चिन्ने वा से उद्दाइ पलिसप्पति वा ?, हंता गोयमा! ते णं जीवा जमाहारेंति तं चिज्जंति जं नो जाव पलिसप्पति वा ८, तेसि णं भंते! जीवाणं एवं सन्नाति वा पन्नाति वा मणोत्ति वा वईइ वा अम्हे णं आहारमाहारेमो ?, णो तिणट्ठे स० आहारेंति पुण ते ९, तेसि णं भंते! जीवाणं एवं सन्ना० जाव वयीति वा अम्हे णं इट्ठाणिट्ठे फासे पडिसंवेदेमो ?, णो तिणट्ठे पडिसंवेदेंति पुण ते १०, ते णं भंते! जीवा किं पाणाइवाइ उवक्खाइज्जंति मुसावाए अदिन्ना० जाव मिच्छादंसणसल्ले उवक्खाइज्जंति ?, गोयमा! पाणाइवाएवि उवक्खाइज्जंति जाव मिच्छादंसणसल्लेवि उवक्खाइज्जंति, जेसिंपि णं जीवाणं

तेवीसइमं सयं समत्तं ॥ २३ ॥ ( सूत्रं ६९३ )

'आलुए'त्यादि, तत्र 'आलुय'त्ति आलुकमूलकादिसाधारणशरीरवनस्पतिभेदविषयोद्देशकदशकात्मकः प्रथमो वर्गः, 'लोहि'त्ति लोहिप्रभृत्यनन्तकायिकविषयो द्वितीयः 'अवइ'त्ति अवककवकप्रभृत्यनन्तकायिकभेदविषयस्तृतीयः 'पाढ'त्ति पाढामृगवालुंकीमधुररसादिवनस्पतिभेदविषयश्चतुर्थः 'मासवन्नीमुग्गवन्नी य'त्ति माषपर्णीमुद्गपर्णीप्रभृतिवल्लीविशेषविषयः पञ्चमः तन्नामक एवेति, पञ्चैतेऽनन्तरोक्ता दशोद्देशकप्रमाणा वर्गा दशवर्गाः, यत एवमतः पञ्चाशदुद्देशका भवन्तीह शत इति ॥ त्रयोविंशतितमशतं वृत्तितः परिसमाप्तम् ॥ २३ ॥

प्राक्तनशतवन्नेयं, त्रयोविंशं शतं यतः। प्रायः समं तयो रूपं, व्याख्याऽतोऽत्रापि निष्फला ॥ १ ॥

इतिश्रीभगवतीसूत्रे श्रीमदाचार्याभयदेवसूरिसूत्रितव्याख्यासहिते त्रयोविंशतितमशतकान्तः

# तृतीयभागः

नोटः—ग्राहकाणामत्यातुरता वर्तमानकालीनमुद्रणादिकार्यदुष्करता चैतावन्मात्रस्यापि भागस्याधुना मुद्रणे हेतुरिति क्षन्तव्यं क्षमाक्षमधिषणैः